नमो नमो निम्मल दंसणस्स

पंचम गणधर श्री सुधर्मास्वामिने नमः

# २९ संस्तारकं-प्रकिर्णकसूत्रम्

सटीकं — सच्छायं

## (षष्ठं-प्रकिर्णकम्)

(मूलसूत्रम् + गुणरत्नसूरि विरचिता वृत्तिः + संस्कृत छाया)

मू. (१) *काऊण नमुक्कारं जिनवरवसहस्स वद्धमाणस्स ।*
*संथारंमि निबद्धं गुणपरिवाडिं निसामेह ॥*

छा. कृत्वा नमस्कारं जिनवरवृषभाय वर्धमानाय ।
संस्तारके निबद्धां गुणपरिपाटीं निशमय ॥

मू. (२) *एस किराराहणया एस किर मनोरहो सुविहिआणं ।*
*एस किर पच्छिमंते पडागहरणं सुविहिआणं ॥*

वृ. एष संस्तारः किलाराधनाचारित्रस्याराधनं एष मनोरथा वांछादि सुविहितानां एष किल पश्चिमंते सुविहितानां पताकाहरणं यथा मल्लानां पताका हरणं यथा भवति ॥

मू. (३) *भूईगहणं जह नक्कयाण अवमाणयं अवज्झा(वऽज्झा)णस्स ।*
*मल्लाणं व पडागा तह संथारो सुविहिआणं ॥*

वृ. यथा भूतिग्रहणं भस्मग्रहणं नक्वानां तापसविशेषाणामुशवकरणं भवति । अयवाऽन्य कृतानांपि त्रादित्यो भागमलभमानानां पुंसां भूतिलाभः प्रमोदाय भवति । यथा वध्यानां आरोपिताऽलीक दोषाणां प्रतित्तिदानेषु द्वेशकलतं महते लाभाय भवति यथा मल्लानां पताका हरणं तु सवाय भवति यथा सुविहितानां शोभनानुष्ठानां संस्तारक तु सवाय भवति ॥

मू. (४) *पुरिसवरपुंडरीओ अरिहा इव सव्वपुरिससीहाणं ।*
*महिलाण भगवईओ जिनजननीओ जयंमि जहा ॥*

वृ. यथा पुरुषसिंहानां चक्रवर्त्यादीनां मध्ये अरिहा पुरुष वरपुंडरीकः । महिलानां मध्ये जिनमातरः ॥

मू. (५) *वेरुलिउव्व मणीणं गोसीसं चंदणं व गंधाणं ।*
*जह व रयणेसु वइरं तह संथारो सुविहिआणं ॥*

छा. वैडुर्योमणिनामिव गोशीर्षं चन्दनमिव गन्धानाम् ।
रत्नेषु यथा वा वज्रं तथा संस्तारः सुविहितानाम् ॥

मू. (६) *वंसाणं जिनवंसो सव्वकुलाणं च सावयकुलाइं ।*
*सिद्धिगई व गईणं मुत्तिसुहं सव्वसुक्खाणं ॥*

* જે-જે ગાથાની વૃત્તિ નથી તે-તે ગાથાની સંસ્કૃત છાયા આપેલી છે.

वृ. सर्व सौख्यनां मध्ये सिद्धि सौख्यं प्रधानं ॥

मू. (७) *धम्माणं च अहिंसा जनवयवयनाण साहुवइणाइं ।*
*जिनवयणं च सुईणं सुद्धीणं दंसणं च जहा ।*

मू. (८) *कल्लाणं अब्भुदओ देवाणं दुल्लहं तिहुअणंमि ।*
*बत्तीसं देविंदा जं तं झायंति एगमणा ॥*

वृ. यथा धर्माणां मध्ये अहिंसा, अजनपद वचनानां मध्ये साधुवचनानि, श्रुतिनां श्रुयमाणत्वेन शास्त्राणां मध्येजिन वचनजलादिषु मध्यानां मध्ये सम्यक्त्व शुद्धिः प्रधानं । तथा संस्तारकः उत्तर गाथातः पंडितमरणमत्राभिः संबध्यते । पंडितमरणं कल्याणं अभ्युदयश्च तयोर्हेतुत्वेन देवानामपि पंडितमरणं त्रिभुवनेपि दुर्लभः ॥

मू. (९) *लद्धं तु तए एयं पंडिअमरणं तु जिनवरक्खायं ।*
*हंतूण कम्ममल्लं सिद्धिपडागा तुमे लद्धा ॥*

वृ. मल्लो जलं जित्वा पताकां लभते । तथा कर्मजयेन सिद्धिर्लब्धाः ॥

मू. (१०) *झाणाण परमसुक्कं नाणाणं केवलं जहाँ नाणं ।*
*परिनिव्वाणं च जहा कमेण भणिअं जिनवरेहिं ॥*

वृ. ध्यानानां मध्ये परमं प्रकृष्टं शुक्लध्यानं निर्वाणानां सुरमरणानां मध्ये परिनिर्वाणं मोक्षः । अथवा सर्वथा कषायान्युपशमात्परित्यागात् यथाख्याते चारित्रं यथा मोक्षकारणं तथा पंडितमरणक्रमेण मुक्तिहेतुर्भणितं ॥

मू. (११) *सव्वुत्तमलाभाणं सामन्नं चेव लाभ मन्नंति ।*
*परमुत्तम तित्थयरो परमगई परमसिद्धुत्ति ॥*

वृ. आस्तां संस्तारकः सर्वोत्तम लाभानां श्रामण्यमेव लाभं मन्यंते यथा सर्वोत्तम स्तीर्थकरः किंभूतः परमज्ञान परमसिध्धाश्चति अथवा येन श्रामण्येन तीर्थकृत्वं केवलज्ञानं मुक्तिर्वा प्राप्यत इति ॥

मू. (१२) *मूलं तह संजमो वा परलोगरयाण किलिट्ठकम्माणं ।*
*सव्वुत्तमं पहाणं सामन्नं चेव मन्नंति ॥*

वृ. परलोकहितेरतानां क्लिष्टमिथ्यात्वादि कर्मणां मोक्षतरो मूलमिव मूलं सम्यक्त्वं तथा संयमो देशसंयमो वा शब्दात् सम्यक् ज्ञानं य एष महान् लाभः परं तथापि सर्वोत्तम लाभानां श्रामण्यमेव विशिष्टं लाभं विवेकिनो मन्यंते ॥

मू. (१३) *लेसाण सुक्कलेसा निअमाणं बंभचेरवासो अ ।*
*गुत्तिसमिई गुणाणं मूलं तह संजमोवाओ ॥*

वृ. संयम एव पाठांतरे तु संयमोपाय एव ज्ञानादि मुक्ति कारण मध्ये तथा प्रधानं मूलं कारणं । सतोरपि ज्ञानदर्शनयो स्वसद्‌भाव एव मुक्ति भावादिति तिसृभिर्गाथाभिः श्रामण्यस्य प्राधान्यमुक्तं किमुतसंस्तारकस्येति भावः ॥

मू. (१४) *सव्वुत्तमतित्थाणं तित्थयरपयासिअं जहा तित्थं ।*
*अभिसेउव्व सुराणं तह संथारो सुविहियाणं ॥*

वृ. सर्वतीर्थानां लौकिकानां मागवरदामप्रभासादीनां लोकोत्तराणामष्टापदादीनां च मध्ये तीर्थंकर प्रकाशितं तीर्थं श्री संघ प्रवचन लक्षणं प्रधानं ! अन्याभिषेकाणां मध्ये देवताकृतो जन्माभिषेको यथा प्रधानः तथा संस्तारकः सुविहितानां ॥

मू. (१५) *सिअकमलकलससत्थिअनंदावत्तवरमल्लदामाणं ।*
*तेसिंपि मंगलाणं संथारो मंगलं अहिअं ॥*

वृ.श्वेत् चामर प्रभृति मंगलानि माल्यानि मालायै हितानि ग्रथित पुष्पाणि वा माल्यं माला कुसुमयोरित्यनेकार्थ वचनात् दामानि मालाणं तेषां मध्ये संस्तारकोधिकं मंगले ॥

मू. (१६) *तवअग्गिनियमसूरा जिनवरनाणां विसुद्धपत्थयणा ।*
*जे निव्वहंति पुरिसा संथारगइंदमारूढा ॥*

वृ. ततपोऽग्नी कर्माष्टक दाहके व्रतेषु वयकर्मबंध हेतुषु। शूराश्चारित्रेण इत्यर्थः । जिनवराणां सम्यग् ज्ञानमेव आसामस्तेन विशुद्धं भवांतरानुयायित्वात्प्रधानं पथ्यदनं येषां ते ये एवं विधासु स्वसुखेन संस्तारक गजेन्द्रमारूढा निर्वहंति । आरोहका अपि हि शूराः बुद्धि नीतिज्ञः सशंबलाश्चलं भवंति ।

मू. (१७) *परमट्ठो परमउलं परमाययणंति परमकप्पुत्ति ।*
*परमुत्तमतित्थयरो परमगई परमसिद्धित्ति ॥*

वृ. अयं संस्तारकः परमार्थो मोक्ष हेतुत्वेन तदा परं प्रकृष्ट अनुत्तमनुत्तमं [illegible] प्रधानं आयतनं ज्ञानादि गुणानां तथा श्वविरादीनां प्रधान एषकल्पः परमेत्यदि । प्राग्वत् ।

मू. (१८) *ता एअं तुमि लद्धं जिनवयणामयविभूसिअं देहं ।*
*धम्मरयणंसिआ ते (०णस्सिया ०णामया) पडिआ भवणंमि वसुहारा ॥*

वृ. तस्मात्कारणादे तत्र त्वया लब्धं जिनवचनामृतं विभूषितं देहधर्मरत्ननिर्मितावासुवृष्टिः।

मू. (१९) *पत्ता उत्तमपुरिसा कल्लाणपरंपरा परमदिव्वा ।*
*पावयण साहु धीरं (०धीरा) कयं च ते अज्ज सप्पुरिसा ॥*

वृ. पत्वातुत्तम प्रवचनकुशलानां साधूनां सुष्ठु वा । धीरं धैर्यं कृतें त्वया संस्तारकं कुर्वता॥

मू. (२०) *सम्मत्तनाणदंसणवररयणा नाणतेअसंजुत्ता ।*
*चारित्तसुद्धसीला तिरयणमाला तुमे लद्धा ॥*

वृ. साम्यं समतामात्तं समात्तं चारित्रं एतदेव विशेषयित्वा प्राह । 'नाण०' । तथा ज्ञान तेजः संयुक्ता चारित्रेण शुद्धं शीलं स्वभावो यस्यः । अतिचार रूप त्रासादि दोषाभावात् ॥

मू. (२१) *सुविहिअगुणवित्थारं संथारं जे लहंति सप्पुरिसा ।*
*तेसिं जिअलोगसारं रयणाहरणं कयं होइ ॥*

वृ. 'सुविहिण०' । सुविहित तै जीवं लोकसारं ज्ञानादिभरणं कृतमात्मनो भवति ॥

मू. (२२) *तं तित्थं तुमि लद्धं जं पयरं सव्वजीवलोगंमि ।*
*ण्हाया जत्थ मुनिवरा निव्वाणमनुत्तरं पत्ता ॥*

वृ. तं तित्थम् । तं तीर्थ० ॥ पूर्वस्मातादित्युक्तं किं भणंस्तव तत्र स्नाता इत्याह -

मू. (२३) *आसवसंवरनिज्जर तिन्निवि अत्था समाहिआ जत्थ ।*
*तं तित्थंति भणंती सीलव्वयबद्धसोवाणा ॥*

वृ. आश्रवाणामिंद्रियाणां समाधान हेतुषु प्रवृत्ति। अहितेभ्यो निवृत्तश्च संवरः समित्यादि। निर्जरा तपः तयोऽर्था समाहितायत संस्तारके तत्र्यर्थं प्राकृतेनत्वं इति भणंति। शीलव्रतान्येव बद्धानि एतत्तीर्थस्य सोपानानियैः ॥

मू. (२४) *भंजिय परीसहचमूं उत्तमसंजमबलेण संजुत्ता।*
*भुंजंति कम्मरहिआ निव्वाणमनुत्तरं रज्जं ॥*

वृ. साधवः ॥

मू. (२५) *तिहुअणरज्जसमाहिं पत्तोऽसि तुमं हि (पि) समयकप्पंमि(ति)।*
*रज्जाभिसेयमउलं विउलफलं लोइ विहरंति ॥*

वृ. तिहुण। त्रिभुवन राज्यं तीर्थकृत्वं केवलज्ञानं मुक्तिर्वा। तस्या हेतुर्य समाधिः संप्राप्तोसि सिद्धांत कल्पेन सिद्धांत विचारेण ननु सिद्धांताभिप्रायेण किमिति राज्येनोपमितः। सदित्युच्यते राज्याभिषेकं विशिष्टं विपुलफलमैहिक सुखफल प्राप्यलोके प्रमुदितचित्ता विविधं। चेष्टंते। अथवातुलं राज्याभिषेकं संस्तारकलक्षणं विपुलफलं लोकं विशेषेण हरंति। आददति ॥

मू. (२६) *अभिनंदइ मे हिअयं तुब्भे मुक्खस्स साहणोवाओ।*
*जं लद्धो संथारो सुविहिअ! परमत्थनित्थारो ॥*

वृ. अभिनंदनि आहलादं करोति मम हृदयं। तुभ्यं प्रणत्वया मोक्षस्य साधनोपायो लब्धः। परमार्थतो ज्ञानादि विस्तार्य ते यत्र ॥

मू. (२७) *देवावि देवलोए भुंजंता बहुविहाइं भोगाइं।*
*संथारं चिंतंता आसनसयणाइं मुंचंति ॥*

वृ. संस्तार गतं साधुं पूर्वानुभूताराधना संस्तारक गुणान् वा चिंतयंते। देवा अप्यासन शयनानि मुंचयंति ॥

मू. (२८) *चंदुव्व पिच्छणिज्जो सूरो इव तेअसा विदिप्पंतो।*
*धनवंतो गुणवंतो हिमवंतमहंतविक्खाओ ॥*

वृ. संस्तारक गतः साधुश्चंद्रवत्प्रेक्षणीयो भवति। सूर्यव्रवतपस्तेजसा दीप्तिमान्। धण। पुण्य धनवान्। हिमण। हिमवत् स्थैर्येण विख्यातः ॥

मू. (२९) *गुत्तीसमिइउववेओ संजमतवनिअमजोगजुत्तमणो।*
*समणो समाहिअमणो दंसणनाणे अणन्नमणो ॥*

वृ. यो गुप्त्यादि युतः श्रमणः समाहित भवाः दर्शनज्ञाने एकाग्रचित्तः तास्यैव संस्तारकः प्रमाणः ॥

मू. (३०) *मेरुव्व पव्वयाणं सयंभुरमणुव्व चेव उदहीणं।*
*चंदो इव ताराणं तह संथोर सुविहिआणं ॥*

वृ. किमिति संस्तारगतः साधुर्विशेषेण वर्ण्यते। यतः पर्वतानां मध्ये मेरुरित्यादि तथा शोभतानुष्ठानानां मध्ये संस्तारकः ॥

मू. (३१) *भण केरिसस्स भणिओ संथारो केरिसे व अवगासे।*
*उवखंपिगस्स (०भिअस्स) करणं एअं ता इच्छिमो नाउं ॥*

वृ. भणवद् कीदृशस्य सतः संस्तारको भणितः कीदृशो वा अवकाशेस्थान काल सत्कैक कीदृशे वा अवष्टंति तस्य कारणे येन क्रियमाणे नावष्टंम्यते विशेषतो जीवः स्थिरी क्रियते पर्यंताराधनायां एतत् तावद् जानुमिच्छामि ॥

मू. (३२) *हायंति जस्स जोगा जरा य विविहा य हुंति आयंका ।*
*आरुहइ अ संथारं सुविसुद्धो तस्स संथारो ॥*

छा. हीयंते यस्य योगा जरा च विविधाश्च भवन्त्यातङ्काः ।
आरोहति च संस्तारकं सुविशुद्धस्तस्य संस्तारकः ॥

मू. (३३) *जो गारवेण मत्तो निच्छइ आलोअण गुरुसगासे ।*
*आरुहइ अ संथारं अविसुद्धो तस्स संथारो ॥*

छा. यो गौरवेण मत्तो नेच्छत्यालोचनां गुरोः सकाशे ।
आरोहति च संस्तारकः अविशुद्धः० ॥

मू. (३४) *जो पुण पत्तब्भूओ करेइ आलोअणं गुरुसगासे ।*
*आरुहइ अ० सुवि० ॥*

वृ. जो 'पुणण्' । पात्रभूतो योग्य आलोचनायाः ।

मू. (३५) *जो पुण दंसणमइलो सिढिलचरित्तो करेइ सामन्नं ।*
*आरु० अवि० ॥*

छा. यः पुनः मलिनदर्शन श्लथचारित्रः करोति श्रामण्यम् ।
आरोहति च संस्तारकं अविशुद्ध० ॥

मू. (३६) *जो पुण दंसणसुद्धो आयचरित्तो करेइ सामन्नं ।*
*आरु० सुवि० ॥*

वृ. 'जो पुणण्' प्राकृतत्वात् 'आत्तचरित्रः । अथवा यो लाभस्वद्भूतं निरतिचारतया चारित्रं यस्य तथा आत्मचरित्रं यस्य स आत्तचरित्र आत्मचरित्रो वा दृढचारित्रो जीवः इत्यर्थः ॥

मू. (३७) *जो रागदोसरहिओ तिगुत्तिगुत्तो तिसल्लमयरहिओ ।*
*आरुहइ० सुवि० ॥*

छा. यो राग द्वेषरहितः त्रिगुप्तिगुप्तस्त्रिशल्य मदरहितः ।
आरोहति च संस्तारकं सुवि० ॥

मू. (३८) *तिहिं गारवेहिं रहिओ तिदंडपडिमोयगो पहिअकित्ती ।*
*आरुहइ० सुवि० ॥*

वृ. त्रिदंडा मनोवचनकायास्वेषां मोचकः प्रथितकीर्तिः ॥

मू. (३९) *चउविहकसायमहणो चउहिं विकहाहिं विरहिओ निच्चं ।*
*आरुहइ० सुवि० ॥*

छा. चतुर्विध कषायमथनश्चतसृभिर्विकथाभिर्विरहितो नित्यम् ।
आरोहति च संस्तारकं सुवि० ॥

मू. (४०) *पंचमहव्वयकलिओ पंचसु समिईसु सुद्धु आउत्तो ।*
*आरुहइ० सुवि० ॥*

छा. पंचमहाव्रतकलितः पंचसु समितिषु सुष्ठ्वायुक्तः ।
आरोहति च संस्तारकं सुवि० ॥

मू. (४१) *छक्काया पडिविरओ सत्तभयट्ठाणविरहिअमईओ ।*
*आरुहइ० सुवि० ॥*

वृ. 'छक्कायण्'। षटकायान् प्रतिविरतः ॥

मू. (४२) *अट्ठमयठाणजढो कम्मट्ठविहस्स खवणहेउत्ति ।*
*आरुहइ० सुवि० ॥*

वृ. जढस्त्यक्तः । अष्टविधकर्म क्षपणहेतुः । संस्तारकः ॥

मू. (४३) *नवबंभचेरगुत्तो उज्जुत्तो दसविहे समणधम्मे ।*
*आरुहइ० सुवि० ॥*

छा. नवब्रह्मचर्यगुप्त उद्युक्तो दशविधे श्रमणधर्मे।
आरोहति च संस्तारकं सुवि० ॥

मू. (४४) *जुत्तस्स उत्तमट्ठे मलिअकसायस्स निव्विआरस्स ।*
*भणकेरिसो उ लाभो संथारगयस्स समणस्स ॥*

वृ. उत्तमार्थे युक्तस्योद्युतस्य । मर्दित कषायस्य लाभः । कर्मक्षपणादि ॥

मू. (४५) *जुत्तस्स उत्तमट्ठे मलिअकसायस्स निव्विआरस्स ।*
*भण केरिसं च सुक्खं संथारगयस्स खमगस्स ॥*

वृ. क्षपकस्य ।

मू. (४६) *पढमिल्लुगंमि दिवसे संथारगयस्स जो हवइ लाभो ।*
*को दाणि तस्स सक्का अग्घं काउं अणग्घस्स ॥*

वृ. प्रथमेक इदानीं तस्य एक दिनार्जित लाभस्यानर्घ्यस्य सतोऽर्घं कर्तुं शक्तः

मू. (४७) *जो संखिज्जभवट्ठिई सव्वंपि खवेइ सो तहिं कम्मं ।*
*अनुसमयं साहुपयं साहू वुत्तो तहिं समए ॥*

वृ. संख्यातजभवस्थि।नेरसंख्यातायुषोक्ता विशेषेणोक्तः । तस्यामवस्थायां विशेषेहि चारित्र प्रतिपत्तिर्न भवति । स साधु पदं प्रतिपन्नः सन् अनुसमयं प्रतिसमयं कर्मक्षपयन् अथवा अनुसमयं साधुपदानुरूपं शमः कुर्वन् तस्मिन्नएव भाव प्रायः सर्वकर्म क्षपयति । तस्मिन्सुपर्यंताराधना समये साधुव्युक्तो विशेषेणोक्तः । तस्यामवस्थायां विशेषेणोक्तः तस्यामवस्थायां विशेषतः कर्मक्षपणात् ॥

मू. (४८) *तणसंथारनिसन्नोऽवि मुनिवरो भट्ठरागमयमोहो ।*
*जं पावइ मुत्तिसुहं कत्तो तं चक्कवट्टीवि ॥*

वृ. लाभमुक्तो सौख्यमोह । 'तण्ण'–गतोपि । निर्लोभता सौख्यं ॥

मू. (४९) *तप्पु(नियपु०) रिसनाडयंमिवि न सा(जा) रई तह सहस्स(त्थ) वित्थारे ।*
*जिनवयणंमिवि सा ते हेउसहस्सोवगूढंमि ॥*

वृ. 'निप्पुरिण्। निपुरुषेपुरुषरहितेनाटकोपि तया तेन प्रकारेण । सहस्र विस्तारो सहच्छित्ति

पाठेतु स्वहस्त विस्तारे देवाहि विक्रियलब्धा स्वहस्ताभ्यां पात्राणि निकर्ष्यधा त्रिंशत भेदनाटकं विस्तारयंतीति स्वहस्तविस्तरै तादृशी न रतिः । या जिनवचने विशाले । रतिहेतु सहस्रव्यासे अथवा पुरुषरहिते नाटके सा न रतिस्तथा । यथास्वहस्त प्रमाणे संस्तारके रति । जिनवचने परिभाव्यमाने सतीति शेषः ।

मू. (५०) *जं रागदोसमइअं सुक्खं जं होइ विसयमईयं च ।*
*अनुहवइ चक्कवट्टी न होइ तं वीअरागस्स ॥*

वृ. य सुखं रागद्वेषमति कं । यं विषयसुखं अनुभविचक्री । एतद्वीतरागस्य न भवति किं तर्हि तत् सुखात्बहुतरं सुखं वीतरागस्य सुखस्य विषयादिविरक्तत्वेनोपशमात्मकत्वात्

मू. (५१) *मा होई वासगणया न तत्थ वासाणि परिगणिज्जंति ।*
*बहवे गच्छं वुत्था जम्मणमरणं च ते खुत्ता ॥*

वृ. मा हो हुण्मा भवत वर्षगणकः । स्तोकेनापि कालेना प्रमादिनः साधका भवंति । पुंडरीकादि वत् । बहवो गच्छवासे विशेषेण चिरकाल सुस्थिताऽपि प्रमाद परे तत्रं तया जन्ममरणं संसारं । ते जीवा इति पाठेतु । अत्यतिशयये न खुत्ता । संसारसागरे मग्ना इत्यर्थः ।

मू. (५२) *पच्छावि ते पयाया खिप्पं काहिंति अप्पणो पत्थं ।*
*जे पच्छिमंमि काले मरंति संथारमारूढा ॥*

वृ. पश्चादपि ते प्रयाता उद्यताः संतः पंचवोपाठेतु प्रतापात स्वदोष चिंतनो पतापात् ॥

मू. (५३) *नवि कारणं तणमओ संथारो नवि अ फासुआ भूमी ।*
*अप्पा खलु संथारो हवइ विसुद्धे चरित्तंमि ॥*

वृ. कीदृशे अवकाशे संस्तारक इति प्रश्नस्य निर्वचनमाह । न विकारणनैव कारणं तृणमयः संस्तारकेनोपि प्रासुकाभूमिः । आत्मैव च संस्तारो विशुद्धे चारित्रे भवति ।

मू. (५४) *निच्चंपि तस्स भावुज्जुअस्स जत्थ व जहिं व संथारो ।*
*जो होइ अहक्खाओ विहारमब्भुट्टि(ज्जु)ओ लूहो ॥*

वृ. 'निच्चंपि' । नित्यमपित भावोद्यतस्य प्रमादिनो यत्र वा क्षेत्रेय यदा वा काले यत्र कृ्वापि संस्तारको भवति । यथा जिनवचने आख्यातः । प्ररूपितः । यथाख्यातो यथोक्तकारी । अहक्खाया पाठेतु यथा जिनप्रवचनं तथैवाख्याता प्ररूपको यथोक्तपादी विहारोभ्युच्छितो द्रव्यतः संलेखना भावतः कषायपरिहारेण । लूहोरुक्षः ॥

मू. (५५) *वासारत्तंमि तवं वितयिथित्ताइ सुट्ठ काऊणं ।*
*हेमंते संथारं आरुहइ सव्वयत्थासु ॥*

वृ. वर्षाकालेऽनेकधात् पांसिकृत्वा हेमंते संस्तारकमारुहति । सर्वसत्वेन सर्ववीर्येण युक्तः ॥

मू. (५६) *आसीअ पोअणपुरे अज्जा नामेण पुप्फचूलत्ति ।*
*तीसे धम्मायरिओ पविस्सुओ अन्निआउत्तो ॥*

मू. (५७) *सो गंगमुत्तरंतो सहसा उस्सारिओ अ नावाए ।*
*पडिवन्न उत्तिमट्ठं तेणवि आराहिअं मरणं ॥*

वृ. अथावष्टंभन प्रश्ननिर्वचनमाह । 'आसीण्' । सोगंगण उत्तरमधुरातो वणिक् सुतोदक्षिण

मथुरांगतः । वणिग् भगिनी अणिका । मार्गसुतो जातः प्रव्रजितो वृद्धत्वे । पुष्पभद्रमतेन पोतन पुरंगतः । पुष्पकेतु नृप पुष्पवती । जो पुष्पचूलः पुष्पचूलाव स्निग्धे च । मात्रा प्रबोधित्ता दुर्भिक्षे तृष्ठैभिक्षानीता गंगायां । येन २ पार्श्वेन नावं विमगितत्तं त क्रडंति । मध्येस्थितः । सर्वे क्रडंति । ते हिं नावि एहिं पाणीपवूढो । नाणमुप्पन्नं देवेहिं महिमा कया । पययागतिर्थ्थं जायं ॥

मू. (५८) *पंचमहव्वयकलिआ पंचसया अज्जया सुपुरिसाणं ।*
*नयरंमि कुंभकारे कडगंमि निवेसिआ तइआ ॥*

मू. (५९) *पंचसया एगूणा वायंमि पराजिएण रुट्ठेणं ।*
*जंतंमि पावमइणा छुन्ना छन्नेण कम्मेण ॥*

मू. (६०) *निम्ममनिरहंकारा निअयसरीरेवि अप्पडीबद्धा ।*
*तेवि तह छुज्जमाणा पडिवन्ना उत्तमं अट्ठं ॥*

वृ. 'पंचमण्' । कुंभकारे त्रिपकारोऽलाक्षणिकः । कुंभकारकडाभिधानेप गृणत्ति । एकोन विराधितत्वात् । छुण्याः क्षिण्याः पिष्टः । छन्नेन आच्छादितेन सावत्थीए नयरीए जियसत्तूराया खंदगोकुमारो । पुरंदरजसाभइणी । कुंभकारनयरे दंडैकिता राज्ञापरिणीता । तन्मंत्रीपालकोधि जातः श्रावसत्यायामागतः कुमारेणा वादनिर्जितः । तेन साधवो यंत्रेघाणके क्षित्वापिष्टा सिद्धाश्च

मू. (६१) *दंडुत्ति विस्सुअजसो पडिमादसथारओ ठिओ पडिमं ।*
*जउणावंके नयरे सरेहिं विद्धो सयंगीओ ॥*

मू. (६२) *जिनवयणनिच्छिअमई निअयसरीरेऽवि अप्पडीबद्धो ।*
*सोऽवि तह विज्झमाणो पडि० ॥*

वृ. 'दंडुत्तिण्'। 'जिणवण्', । सुरैर्गीतोवर्णितो सयंगीत्तु । इति पाठेतु सर्वांगीणोपि-र्विद्धः मधुरायां यवनो राजा । तेन यमुनाचक्रनगरस्योद्यानेकायो सर्गस्थो दंडनामा विख्यातयश-शार्थति ध्दः । बाणेहतोमृतो अंतकृत्केवली देवागमः । शक्रभाषित प्रव्रज्य यवन एवमभिग्रहं लली यावदे रुषिघातं स्मरिष्येतावन्न मोक्ष्ये । अर्धभुक्तमपित्यक्ष्ये इति सन सदाभुक्तः ।

मू. (६३) *आसी सुकोसलरिसी चाउम्मासस्स पारणादिवसे ।*
*ओरुहमाणो अ नगा खइओ मायाइ वग्घीए ॥*

मू. (६४) *धीधणिअबद्धकच्छो पच्चक्खाणम्मि सुट्ठु उवउत्तो*
*सो तहवि खज्जमाणो पडि० ॥*

वृ. 'आसी०' 'धीधणि०' – छायारं बुभुक्षितया ज्ञाक्षामयात । धीधण्धीबुद्धि स्तया धणिय-मित्यर्थं बद्धकक्षः साकेतपुरे कीर्तिधर नृप सहदेवसूः सुकोसलः पितृमुनिनः कासने प्रव्रजितः व्याघ्राभक्षितः

मू. (६५) *उज्जेनीनयरीए अवंतिनामेण विस्सुओ आसी ।*
*पाओवगमनिवन्नो सुसाणमज्झम्मि एगंतो ॥*

मू. (६६) *तिन्नि रयणीइ खइओ भल्लंकी रुट्ठिया विकड्ढंती ।*
*सोवि तह खज्जमाणो पडि० ॥*

वृ. 'उज्जेणीरयणीणं' । रजन्यास्त्रीभिः प्रहारेरितिशेषः । भल्लुकी शिवा । उज्जायिन्यां सुहस्तितो

नलिनीगुल्मं श्रुत्वा एभद्रोश्रेष्ठिनी सुतोऽवंति सुकुमालो मातृ ३२ भार्याऽननुमतावपि प्रव्रज्य स सा भक्तं पद्मकिखअ उणठिउ लोहिय गंधेण सावच्या शिवा आगया। पढमे जत्तु गाणि। बीए ऊरु। तइए पोठं। कालगतु। पुष्पाद्रबुद्धि। सधातुपच्चइआ। सुव्विणीए गानियत्वा। तत्पुत्रकारितं देवकुलं महाकालं।

मू. (६७) *जल्लमलपंकधारी आहारी सीलसंजमगुणाणं।*
*अज्जीरणो अ गीओ कत्तिअ अज्जो सुरवरं(णं)मि॥*

मू. (६८) *रोहीडगंमि नयरे आहारं फासुअं गवेसंतो।*
*कोवेण खत्तिएण य भिन्नो सत्तिप्पहारेणं॥*

मू. (६९) *एगंतमणावाए विच्छिन्ने थंडिले चइअ देहं।*
*सोऽवि तह भिन्नदेहो पडि०॥*

वृ. 'जल्लाण' 'रोहीण'। गंण्याति विगलितन्वजलोमात्रं मलः कतिनीभूतः। पंकोमल - एव। स्वेदनाद्रीभूतः। आजिसंग्रामंईश्यति। क्षपयति। जयतीतियावत्। पूर्वावस्था। तत्पुत्रकारितं देवकुलं महाकालं। सुभटैः सह श्रामण्येतु कर्मभिः देवैर्गीतः। कार्तिकार्यनामा शरवण संनिवेशे जातः। रोहीडे पूर्वधेन क्षत्रियेणं शक्त्याहतः।

मू. (७०) *पाडलिपुत्तंमि पुरे चंदयगुत्तस्स वेव आसीअ।*
*नामेण धम्मसीहो चंदसिरिं सो पयहिऊणं॥*

मू. (७१) *कुल्लउरंमि पुरवरे अह सो अब्भुट्ठिओ ठिओ धम्मे।*
*कासीअ गिद्धपट्ठं पच्चक्खाणं विगयसोगो॥*

मू. (७२) *अह सोवि चत्तदेहो तिरिअसहस्सेहिं खज्जमाणो अ।*
*सोऽवि तह०॥*

वृ. पाडण् कोलूण् अहण्। पाडलिपुत्रे पुरे चंद्रगुप्तपुत्रस्य बिंदुसारस्य मित्रं सुबांधस्वस्य सुत धर्मसिंहः। चंद्रगुप्त प्रदत्तलक्षीः सन् चंद्रश्रीः प्रस्तावातामेव परित्यज्य कोल्लयरे प्राप्तः। शत्रुंजयाभिधः सन् अभ्युद्यतो। मृतककडेवरमध्यास्थितः॥

मू. (७३) *पाडलिपुत्तंमि पुरे चाणक्को नाम विस्सुओ आसी।*
*सव्वारंभनिअत्तो इंगिणिमरणं अह निवन्नो॥*

मू. (७४) *अनुलोमपूअणाए अह से सत्तू जओ डहइ देहं।*
*सो तहवि डज्झमाणो पडि०॥*

मू. (७५) *गुट्ठयपाओवगओ सुबंधुणा गोयमे पलिवियंमि।*
*डज्झंतो चाणक्को पडि०॥*

वृ. 'पाडलिण्'। 'अणुण्'। पाडलीपुरे अनशनं प्रतिपत्ति तत्रैव गोष्टे निवर्णोस्विकरीष संस्तारके सुतः शत्रुंजया पुराभिधः सुबंधुरमात्यः।

मू. (७६) *काइंदीनयरीए राया नामेण अमयघोसुत्ति।*
*तो सो सुअस्स रज्जं दाऊणं इह चरे धम्मे॥*

छा. काकन्द्यां नगर्यां राजा नाम्नाऽमृतघोष इति।
ततः स सुताय राज्यं दत्त्व। इहाचरत् धर्मम्॥

मू. (७७) *आहिंडिऊण वसुहं सुत्तत्थविसारओ सुअरहस्सो।*
*काइंदिं चेव पुरिं अह पत्तो विगयसोगो सो॥*

छा. आहिण्डय वसुधां सूत्रार्थ विशरदः श्रुत रहस्यः।
काकन्दीमेव पुरमथ प्राप्तो विगतशोकः सः

मू. (७८) *नामेण चंडवेगो अह से पडिछिंदइ तयंदेहं।*
*सो तहवि छिज्जमाणो पडिवन्नो० ॥*

वृ. चंद्रवेगः पूर्वापराथितः कोऽपि मंत्रीवाऽन्यः। तयंतत्कंदेहं

मू. (७९) *कोसंबीनयरीए ललिअघडानाम विस्सुआ आसि।*
*पाओवगमनिवन्ना बत्तीसं ते सुअरहस्सा॥*

मू. (८०) *जलमज्झे ओगाढा नईइ पूरेण निम्ममसरीरा।*
*तहवि हु जलदहमज्झे पडिवन्ना० ॥*

वृ. कौशांव्यां त्रिंशल्ललितगोष्ठिकाः पुरुषाः श्रुतरहस्यविदो, नदीतीरे पृथुकाष्ठशय्यासु पादपोपगमनं प्रपन्ना अकालगतनदीपूरेण प्लाविताः समुद्रमध्येनीताश्च।

मू. (८१) *आसी कुलाणनयरे राया नामेण वेसमणदासो।*
*तस्स अमच्चो रिट्ठो मिच्छद्दिट्ठी पडिनिविट्ठो॥*

मू. (८२) *तत्थ य मुणिवरवसहो गणिपिडगधरो तहासि आयरिओ।*
*नामेण उसहसेणो सुअसायरपारगो धीरो॥*

मू. (८३) *तस्सासी अ गणहरो नाणासत्यत्थगहिअपेआलो।*
*नामेण सीहसेणो वायंमि पराजिओ रुट्ठो॥*

मू. (८४) *अह सो निराणुकंपो अग्गिं दाऊण सुविहिअपसंते।*
*सो तहवि डज्झ० ॥*

वृ. आसीण्। तत्थण्। तस्सण्। अहण्। अरिष्ठनामाऽमात्यः। गणिपिड्बहुश्रुतो बहुपरिचारश्चं पेयालं रहस्यं। सुविहितानां उपाश्रयेऽग्निदत्वागतः॥

मू. (८५) *कुरुदत्तोऽवि कुमारो सिंबलिफालिव्व अग्गिणा दड्ढो।*
*सो तहवि डज्झ० ॥*

वृ. कुरुणफालिः कपगंडिः फलंवा। हस्तिनागपुरे कुरुदत्तोनाम इभ्यः पुत्रः स्थविराणां समीपे प्रव्रजितो बहुश्रुतो जातः। कदाचिदेकल्लविहार प्रतिमां प्रतिपन्नः। एतस्य नगरस्याऽदूर सामंते पश्चिमां पौरुषीं स्थितः। तत्रैवोचत्वरे गोधनं धत्वास्त्वेनाः समागताः पश्चाद् गोधनस्वामिन आगताः। द्वौ पंथानौ तैः सम्यगऽजानाने मुनिर्न बूते। कतरेण मार्गेण नीतं गोधनं। मुनि र्न ब्रूते तैः क्रुधिस्वस्य शीर्षे पालिबंधयित्वा आर्द्रमृतिका या चितांगाराः शीर्षे क्षिप्ताः॥

मू. (८६) *आसी चिलाइपुत्तो मुइंगुलिआहिं चालणिव्व कओ।*
*सो तहवि ख० ॥*

वृ. आसीण्। विणमृदंगलिकाभि पिपीलिकाभिश्चालनीवत् कृतः।

मू. (८७) *आसी गजसुकुमालो अल्लयचम्मं व कीलयसएहिं।*
*धरणीअले उव्विद्धो तेणवि आराहिअं मरणं ॥*

वृ. आसीण्। आसीत्। गजकुसुमालाभिधात इभ्य पुत्रः। सोपि कुरुदतवत्। न वरमस्य शरीरं आद्र चर्मवत्। तेन रुष्टेन कीलकानाद्यताडितं।

मू. (८८) *मंखलिणावि य अरहओ सीसा तेअस्स उवगया दड्ढा।*
*ते तहवि इज्झ० ॥*

वृ. संखमंखलिशब्देन गोशालको ज्ञेयः पुत्रः शब्दलोपात्। शिषयौ भगवतः। सर्वानुभूतिः सुनक्षत्रनामान तेजोलेश्ययोपगतौ समीपागतौ दग्धौ ॥

मू. (८९) *परिजाणई तिगुत्तो जावज्जीवाइ सव्वमाहारं।*
*संघसमवायमज्झे सागारं गुरुनिओगेणं ॥*

वृ. परिण्। परिज्ञया ज्ञानाति। प्रत्याख्यान परिज्ञया च परिहरति सर्वाहारं चतुर्णामिष्या हाराणां भणनेन सागारभमशन्ं ॥

मू. (९०) *अहवा समाहिहेउं करेइ सो पाणगस्स आहारं।*
*तो पाणगंपि पच्छा वोसिरइ मुणी जहाकालं ॥*

वृ. अहण्। अथवा त्रिधाहारं प्रत्याख्यायं (पानका) पानैका हारमाहारयति समाधिहेतुं। ततः पश्चात् पानकमपि व्यसृजति ॥

मू. (९१) *खामेमि सव्वसंघं संवेगं सेसगाण कुणमाणो।*
*मनवइजोगेहिं पुरा कयकारिअअणुमए वावि ॥*

वृ. अवकृतांजलि सन् भणति। खामेमिक्षमयामि सर्वसंघं मनोवचनं कायैः पुरा इति। पूर्वकृतापराधान्।

मू. (९२) *सव्वे अवराहपए एस खमावेमि अज्ज निस्सल्लो।*
*अम्मापिऊसरिसया सव्वेऽवि खमंतु मह जीवा ॥*

वृ. 'सव्वेण'० स्पष्टः। गुरवः क्षपकमेवमनुशासति।

मू. (९३) *धीरपुरिसपन्नत्तं सप्पुरिसनिसेविअं परमघोरं।*
*धन्ना सिलायलगया साहंती उत्तमं अट्ठं ॥*

वृ. धीरेण्। धीरा पर अन्यैर्दुरनुचरं।

मू. (९४) *नारयतिरिअगईए मणुस्सदेवत्तणे वसंतेणं।*
*जं पत्तं सुहदुक्खं तं अणुचिंते अणन्नमणो ॥*

मू. (९५) *नरएसु वेअणाओ अणोवमाओ असायबहुलाओ।*
*कायनिमित्तं पत्तो अणंतखुत्तो बहुविहाओ ॥*

मू. (९६) *देवत्ते मणुअत्ते पराभिओगत्तणं उवगएणं।*
*दुक्खपरिकिलेसकरी अणंतखुत्तो समणभूओ ॥*

मू. (९७) *तिरिअगइं अणुपत्तो भीममहावेअणा अणोअरया (वारा)।*
*जम्मणमरणऽरहट्टे अणंतखुत्तो परिब्भमिओ ॥*

**वृ.** नारयणगाथा स्पष्टाः न वरंअनुचिंतेसि अनुचिंतयत ।

**मू. (९८)** *सुविहिअ ! अईयकाले अनंतकालं तु आगयगएणं ।*
*जम्मणमरणमनंतं अनंतखुत्तो समणुभूओ ॥*

**वृ.** 'सुविण्हे' सुविहंत अनंतकायमध्ये आगतगतेन यातायातेन गमनागमनेव जन्ममरणान्यनंतानि अनंतकृत्वोऽनंतवारान् ।

**मू. (९९)** *नत्थि भयं मरणसमं जम्मणसरिसं न विज्जए दुक्खं ।*
*जम्मणमरणायंकं छिंद ममत्तं सरीराओ ॥*

**वृ.** नत्थिणजन्म मरणरूपांतक हेतुछिंदममत्वं ममेति बुद्धिं शरीरान् ॥

**मू. (१००)** *अन्नं इमं सरीरं अन्नो जीवत्ति निच्छयमईओ ।*
*दुक्खपरिकिलेसकरं छिंद ममत्तं० ॥*

**मू. (१०१)** *तम्हा सरीरमाइं सब्भिंतरबाहिरं निरवसेसं ।*
*छिंद ममत्तं सुविहिअ ! जइ इच्छसि उत्तमं ठाणं ॥*

**मू. (१०२)** *जगआहारो संघो सव्वो मह खमउ निरवसेसंपि ।*
*अहमवि खमामि सुद्धो गुणसंघायस्स संघस्स ॥*

**वृ.**अन्नंण गाथान् ३ स्पष्टाः विशेषतः पुनः क्षपक श्रमणामाह ॥ जगदाधार संघः सर्वोपि ममनिरवशेषमनिष्टं निष्टं क्षमतु अहमपि शुद्धः क्षमयामि गुण संघातस्य गुणसमूहयुक्तस्य । संघस्य ।

**मू. (१०३)** *आयरिअ उवज्झाए सीसे साहम्मिए कुलगणे य ।*
*जे मे केइ कसाया सव्वे तिविहेण खामेमि ॥*

**मू. (१०३)** *सव्वस्स समणसंघस्स भयवओ अंजलिं करिअ सीसे ।*
*सव्वं खमावइत्ता अहमवि खामेमि सव्वस्स ॥*

**मू. (१०४)** *सव्वस्स जीवरासिस्स भावओ धम्मनिहिअनिअचित्तो ।*
*सव्वं खमावइत्ता अहयंपि खमामि सव्वेसिं ॥*

**वृ.** 'आयण' 'सव्वण' । 'सव्वस्य' । [स्पष्टाः]

**मू. (१०५)** *इअ खामिअइआरो अनुत्तरं तवसमाहिमारूढो ।*
*पप्फोडंतो विहरइ बहुविहबाहाकरं कम्मं ॥*

**वृ.**'इअण' । इत्यनेन पूर्वोक्त प्रकारेण क्षमितातिचारः ॥

**मू. (१०६)** *जं बद्धमसंखिज्जाहिं असुभभवसयसहस्सकोडीहिं ।*
*एगसमएण विहुणइ संथारं आरुहंतो य ॥*

**वृ.** यद् अशुभं कर्म असंख्ये याभिर्भव लक्षकोटीभिः बंधतदेक समये विधुनोति स्फोटयति ॥

**मू. (१०७)** *इअ (ह) तह विहारिणो से विग्घकरी वेअणा समुट्ठेइ ।*
*तीसे विज्झवणाए अणुसट्ठिं दिंति निज्जवया ॥*

**वृ.** इत्येव यथोक्तं तथा विहारिणः समाधौ विघ्नकारिणी वेदना समुतिष्ठति । तस्याविध्यायनार्थं निर्यामिकाः सूरयोऽनु शास्तिं ददाति ॥

मू. (१०८) *जइ ताव ते मुनिवरा आरोविअवित्थरा अपरिकम्मा ।*
*गिरिपब्भार विलग्गा बहुसावयसंकडं भीमं ॥*

वृ. आरोपित आत्मनि आराधना विस्तारो यैः अपरिकृतपादपोपगमः । गिरिप्राग् भारं (वं) द्वितीयाऽमलोपः ॥

मू. (१०९) *धीधणिअबद्धकच्छा अणुत्तरविहारिणो समक्खाया ।*
*सावयदाढगयाविहु साहंती उत्तमं अट्ठं ॥*

वृ. धृती संतोष इत्यर्थः बद्धः कक्षाः प्रगुणतया । अनुत्तरप्रधान विहारिणाः प्रणक्ताः श्वापद दंष्ट्रागता अपि साधयंत्युत्तमार्थं । सुकोसलादयः ॥

मू. (११०) *किं पुण अनगारसहायगेहिं धीरेहिं संगयमणेहिं ।*
*नहु नित्थरिज्जइ इमो संथारो उत्तमं अट्ठं ॥*

वृ. विशेषोपसर्गरहितत्वेन तद्भावे वा सिद्धांत श्रुत्वावसंगतं आर्त्त रौद्ररहितं मनो येषां तैः किं न निस्तीर्यते । अपितुनिस्तीर्यत एव ॥

मू. (१११) *उच्छूढसरीरधरा अन्नो जीवो सरीरमन्नंति ।*
*धम्मस्स कारणे सुविहिआ सरीरंपि छड्डंति ॥*

वृ. 'उच्छूण' त्युक्तदेहगृहाः ॥

मू. (११२) *पोराणिअ पच्चुप्पन्निआ उ अहिआसिऊण विअणाओ ।*
*कम्मकलंकलवल्लीं । विहुणइ संथारमारूढो ॥*

वृ. पौराण – पुरोतन् रोगः जराद्याः वेदनाः । प्रत्युत्पन्नाः क्षुत्पिपासाद्याः कर्मैव कलंकलं अशुभवस्तु तस्य वल्लीसंतानः । अन्योहस्ताद्यारूढोक्तेश नैव वल्ली । स्त्रोटयति ॥

मू. (११३) *जं अन्नाणी कम्मं खवेइ बहुआहिं वासकोडीहिं ।*
*तं नाणी तिहिं गुत्तो खवेइ ऊसासित्तेणं ॥*

वृ. 'जं अण्' उच्छ्वास् मात्रेण कालेनेति गम्यते ॥

मू. (११४) *अट्ठविहकम्ममूं बहुएहिं भवेहिं संचिअं पावं ।*
*तं नाणी० ॥*

वृ. 'अट्ठण्' । अष्टविधकर्ममूलं पापां यदर्जितं ॥

मू. (११५) *एवं मरिऊण धीरा संथारंमि उ गुरु पसत्थंमि ।*
*तइअभवेण व तेण व सिज्झिज्ञा खीणकम्मरया ॥*

वृ. एवण् । एवं मृत्वाधीराः संस्तारकेगुरौ गुणै गरिष्टे । गुरवो धीरा इत्यस्य विशेषेणं वा । तृतीय भावेनतेनेव भवेन वा सिद्धेयुः क्षीणकर्म रजसः ॥

मू. (११६) *गुत्तीसमिइगुणड्ढो संजमतवनिअमकरणकयमउडो ।*
*सम्मत्तनाणदंसणतिरयणसंपाविअसमग्घो (महग्घो) ॥*

मू. (११७) *संघो सइंदयाणं सदेवमणुआसुरम्मि लोगम्मि ।*
*दुल्लहतरो विसुद्धो सुविसुद्धो तो महामउडो ॥*

वृ. 'गुण्' 'संघोण' । संघो मुकुट इव मुकुटः । किं भूतः संयम तपोनियमः । एवं यत्

कनकंतेन कृ त इति विशेषणं लुप्त विभक्तिकं साम्याइं सामयिकं चारित्रमित्यर्थः । तदादिभिस्त्रीभिरत्रै प्रत्योषितैः परिकर्मितैर्महः । प्रत्योषित शब्दस्य परनिपातः परिकर्मितैर्महः । प्रत्योषित शब्दस्य परनिपातः प्राकृतत्वेन । मुकुटोहि ज्वरविषायहारादि माणिसंपर्कात् गुणाद्यः ।कनककृतः । शिख-रत्रयिपि रत्न गयापिलंकृतश्च भवति । श्री संघः केषां मुकुटो भवतीत्याह । सेंद्राणामपि देवानां क्व सदेवेति । लोकमध्ये देवमनुजा सुरेषु सश्चपीतिमावः । किं भूतःदुर्लभ तपस्तापविशुद्धः । कर्ममलापनयनात् ननु संघस्य मुकुटमात्रतासु । महामुकुटत्वं च नितरां विशुद्धत्वं च पुनः सुवर्णादि घादेत मुकुटस्यैवत्याशंक्याह । सुविणससंधएव सुविशुद्धो महामुकुटो तनु सुवर्णादि मुकुटं स्वस्याभिमानानुरागादि बुद्धिहेतुत्वेन कर्ममलोपचयकारित्वात् ! दुल्हतारा विशुद्धो । अविशुद्धोतो महामनुडो त्रिपाठांतरेत्वेनं । व्याख्या । संघमुकुटः । सेंद्राणामपि देवानां दुर्लभतरः क्व स देवेति प्रागवत् । विशुद्धः कर्ममलापगमात् । तो गतः संघमुकुटादन्यो महानपि मुकुटः सुवर्णादिकृतो अविशुद्ध एवाभिमानादि हेतुत्वेन कर्मोपचयकारित्वात् ॥

मू. (११८) *डज्झंतेणवि गिम्हे कालसिलाए कवल्लिभूआए।*
*सूरेण व चंडेण व किरणसहस्संपयंडेणं ॥*

मू. (११९) *लोगविजयं करितेण तेण झाणोवउत्तचित्तेणं।*
*परिसुद्धनाणदंसणविभूइमंतेण चित्तेणं ॥*

मू. (१२०) *चंदगविज्झं लद्धं केवलसरिसं समाउ परिहीणं।*
*उत्तमलेसाणुगओ पडिवन्नो उत्तमं अट्ठं ॥*

वृ. दह्यतापि ग्रीष्मकालमरणशिलायां क्व वल्लित्रिमंडक पचनिका सूर्येणेव तपः किरण सहस्र प्रचंडेना चंद्रेणेव सौम्य लेश्या चंद्रिकाभ्यधिकेन कषायलोक विजयं कुर्वतः । ध्यानोपयोग युक्त चितेन विभूतिमनाचित्रेण चित्रनाम्ना प्रसिद्धेनान्येन महर्षिणा । चंद्रक वेध्यं च राधावेधं दुर्लभं लब्धं । केवल सदृशं ज्ञानरूपं । समानुत्ति । केवलज्ञानेन च सममायुः परिक्षीणं । उत्तमलेश्यानुगतः ।

मू. (१२१) *एवं मए अभिथुआ संथारगइंदखंधमारूढा।*
*सुसमणनरिंदचंदा सुहसंकमणं सया दिंतु ॥*

एवं पूर्वोक्त प्रकारेण मयाभिष्टुताः श्रुताः । संस्तारक गजेंद्रमारुढाः संतः । सुसमण नरेंद्राहि प्रौढा गजेन्द्रस्कंधमारोहंति । सुहसंकमेण सुखस्य मुक्ति सुखस्य शुभस्य वा संक्रांतिं । संसारदुःखाद्धा निसृत्य प्राप्तिं ममदनुः ॥

## २९ | षष्ठं प्रकीर्णकम् संस्तारकं समाप्तम्

**मुनि दीपरत्नसागरेण संशोधिता सम्पादिता संस्तारकप्रकीर्णकस्य**
**गुणरत्नसूरि रचिता टीका (अवचूर्णिः) परिसमाप्ता ।**

❋❋❋

卐 ત્રણ હસ્તપ્રતો મેળવીને સંપાદન કરવા છતાં આ અવચૂર્ણિ માં અનેક ત્રુટી અને ક્ષતિ જણાય છે.